वा संवत्सरस्य मासास्संवत्सरो यज्ञः प्रजापतिस्तदेतं प्रत्यक्षं यज्ञं[12] प्रजापतिमास्वा तं परिगृह्य तमात्मनि कुरुते तमात्मनि धत्ते ॥ २१ ॥ इति प्रथमं ब्राह्मणम् ॥

## द्वितीयं ब्राह्मणम्

आग्नेयोऽष्टाकपालो भवति तं पुरस्तादासादयत्यैन्द्र एकादशकपालो भवति तं दक्षिणत आसादयति सौम्यो वा चरुर्[1]वैश्वदेवश्चरुर्भवति तं पश्चादासादयति मैत्रावरुणी पयस्या भवति तामुत्तरत आसादयति बार्हस्पत्यश्चरुर्भवति तं मध्य आसादयति तेषां वा एतेषां पञ्चानाꣳ हविषां पञ्च बिलानि स यदेतेषां पञ्चानाꣳ हविषां पञ्च बिलानि तस्माच्चरुः पञ्चबिल इत्याख्यायते ॥ १ ॥

स यदेतेन यजते यदेवैनमदो दिशः समारोहयति यद्दृतून्यत्स्तोमान्यच्छन्दाꣳसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति यद्धैतेन न यजेत दुप्येद्वाह म्रियेत वा प्र वा पतेत्तस्मादेतेन यजते ॥ २ ॥

सोऽनेनाग्नेयेनाष्टाकपालेन पुरोळाशेन प्रचरति यदेवैनं प्राचीं दिशꣳ समारोहयति यद्दृतून्यत्स्तोमान्यच्छन्दाꣳसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति स हुत्वैवाहुतिꣳ सꣳस्रवं बार्हस्पत्येऽवनयति ॥ ३ ॥

अथानेनैन्द्रेणैकादशकपालेन पुरोळाशेन प्रचरति सौम्येन वा चरुणा स यतरेणैतयोश्चरति यदेवैनं दक्षिणां दिशꣳ समारोहयति यद्दृतून्यत्स्तोमान्यच्छन्दाꣳसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति स हुत्वैवाहुतिꣳ सꣳस्रवं बार्हस्पत्येऽवनयति ॥ ४ ॥

अथानेन वैश्वदेवेन चरुणा प्रचरति यदेवैनं प्रतीचीं दिशꣳ समारोहयति यद्दृतून्यत्स्तोमान्यच्छन्दाꣳसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति स हुत्वैवाहुतिꣳ सꣳस्रवं बार्हस्पत्येऽवनयति ॥ ५ ॥

१२. प्रत्यक्षयज्ञं Ca

१. सौम्यं वा चरुं TE

or thirteen months and the sacrifice, Prajāpati is year. Thus he directly obtains the sacrifice, i.e. Prajāpati, having acquired him, he puts him into himself and owns him to himself. (First Brāhmaṇa Ends)

## BRĀHMAṆA II

1. The *puroḍāśa* for Agni is in eight potsherds. He places it on the eastern side. There is a *puroḍāśa* in eleven potsherds for Indra or a *caru* for Soma. He places it on the southern side. There is a *caru* for Viśvedevas which, he keeps on the Western side. There is a curd preparation for Mitra-Varuṇa which he places on the northern side. There is a *caru* for Bṛhaspati. He keeps it in the middle. For these five oblations, there are five *bilas* (holes or conclave depressions to hold the dishes). Therefore (the collection of five offerings) is called *pañcabila* (five-holed).

2. Now as to why he (priest) makes him offer these (*pañca-bila* oblations) is this—because he had made him (the Yajamāna) ascend these regions, these seasons, these *stomas*, these metres and these *sāmans*, therefrom he now redeems him (Yajamāna) by these offerings. If he were not to perfrom these offerings, then he would become arrogant or die or he may collapse. Therefore he should make these offerings.

3. He then proceeds with this *puroḍāśa*, in eight potsherds for Agni. With this, it was he who made him ascend the eastern region; those seasons, those *stomas*, those metres and those *sāmans* (corresponding to it). From those, he redeems him (Yajamāna). After making the offering, he pours the residue in the *caru* for Bṛhaspati.

4. He then proceeds with the *Puroḍāśa* in eleven potsherds for Indra or with a *caru* for Soma. By either of these had he made him ascend the southern region, those seasons, those *stomas*, those metres and those *Sāmans* (corresponding to it). From those he redeems him (Yajamāna). After making the offering he pours the residue in the *caru* for Bṛhaspati.

5. He then proceeds with the *caru* for Viśvedevas. By that had he made him ascend the western region; those seasons, those *stomas*, those metres and those *sāmans* (corresponding to it). From those, he redeems him (Yajamāna). After making the offering, he pours the residue in the *caru* for Bṛhaspati.

अथानया मैत्रावरुण्या पयस्यया प्रचरति यदेवैनमुदीचीं दिशꣳ समारोहयति यदृतून्यत्स्तोमान्यच्छन्दाꣳसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति स हुत्वैवाहुतिꣳ सꣳस्रवं बार्हस्पत्येऽवनयति ॥ ६ ॥

अथानेन बार्हस्पत्येन चरुणा प्रचरति यदेवैनमूर्ध्वां दिशꣳ समारोहयति यदृतून्यत्स्तोमान्यच्छन्दाꣳसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति स यद्धुत्वा हुत्वा सꣳस्रवं बार्हस्पत्येऽवनयति सर्वाभ्य एवास्मा एतद्दिग्भ्योऽन्नाद्यं बलिꣳ हारयति तꣳ सर्वाभ्यो दिग्भ्योऽन्नाद्यं बलिरुपसमैति ॥ ७ ॥

तस्यास्याग्नेयस्याष्टाकपालस्य हिरण्यं दक्षिणाग्नेयो ह्येष यज्ञोऽग्नेर्हि रेतो हिरण्यं तस्मादस्य हिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्ह्येष निदानेन यदग्नीत्तस्मात्तदग्नीधे ददाति ॥ ८ ॥

अथास्यैन्द्रस्यैकादशकपालस्यर्षभो दक्षिणा तद्धि पशुष्वैन्द्रꣳ रूपं यदृषभस्य यद्यु सौम्यश्चरुः स्याद्बभ्रुर्गौर्दक्षिणा स्यात्तद्धि पशुषु सौम्यꣳ रूपं यद्बभ्रोर्गोस्स यतर एतयोर्भवति तं ब्रह्मणे ददाति ब्रह्मा हि दक्षिणतो यज्ञस्याभिगोप्ता ॥ ९ ॥

अथास्य वैश्वदेवस्य चरोः पृषन्गौर्दक्षिणा भूमा वा एतद्रूपाणां यत्पृषतो गोर्भूमो वै विश्वेदेवास्तस्मादस्य पृषन्गौर्दक्षिणा तꣳ होत्रे ददाति भूमो हि होता ॥ १० ॥

अथास्या मैत्रावरुण्याः पयस्याया वशा दक्षिणा सा हि मैत्रावरुणी यद्वशा यदि वशां न विन्देदपि याप्रवीता सा स्यादप्रवीतो हि वशा भवति तामध्वर्यवे ददाति प्राणोदानौ वै मित्रावरुणौ प्राणोदाना उ वा अध्वर्यू तस्मात्तामध्वर्यवे ददाति ॥ ११ ॥

अथास्य बार्हस्पत्यस्य चरोश्शितिपृष्ठो गौर्दक्षिणैषा ह्यूर्ध्वा दिग्बृहस्पतेस्तदेष उपरिष्टादर्यम्णः पन्थास्तस्मादस्य शितिपृष्ठो गौर्दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्वै देवानां ब्रह्मैवमु वा एष एतस्य ब्रह्मा तस्मात्तं ब्रह्मणे ददाति ॥ १२ ॥

तेन हाप्येतेन विष्ठाव्राजो[२]ऽन्नाद्यकामो यजेत सर्वाभ्य एवास्मा एतद्दिग्भ्योऽन्नाद्यं बलिꣳ हारयति तꣳ सर्वाभ्यो दिग्भ्योऽन्नाद्यं बलिरुपसमैति स सर्वासां दिशामन्नादो भवति ॥ १३ ॥ इति द्वितीयं ब्राह्मणम् ॥

२. विष्ठाव्राजे TE, विष्ठाव्राजे Ca, see notes

6. He then proceeds with the *puroḍāśa* in eleven potsherds for Indra or with a *caru* for Soma. By either of these had he made him ascend the southern region, those seasons, those *stomas*, those metres and those *sāmans* (corresponding to it). From those he redeemds him (the Yajamāna). After making the offering, he pours the residue in the *caru* for Bṛhaspati.

7. He then proceeds with the *caru* for Bṛhaspati. By that he had made him ascend the upper region. Each time after making the offerings, he pours the residue into the *caru* for Bṛhaspati. Thereby he causes food to be bestowed upon him (Yajamāna) and hence food offerings reach him (the king).

8. For this (*puroḍāśa* offering) in eight potsherds for Agni, gold is *dakṣiṇā*. For this sacrifice belongs to Agni and gold is Agni's seed. Therefore gold is *dakṣiṇā* for this and it has to be given to Agnīdh, for he (Agnīdh) is virtually Agni himself. So it is to be given to Agnīdh.

9. For this (*puroḍāśa* offering) in eleven potsherds for Indra, a bull is *dakṣiṇā*. For it (bull) is the Indra's form among animals. If it is the *caru* of Soma, then a brown ox is the *dakṣiṇā*. Because it (brown ox) is the Soma's form among animals. Whichever of these happens to be (the *dakṣiṇā*), it is to be given to Brahmā. Because Brahmā is the protector of the sacrifice from the south.

10. For this (offering) of *caru* for Viśvedevas, a spotted cow is *dakṣiṇā*. That which is a spotted cow, has abundance of colours. Viśvedevas form a multitude. Therefore for this, a spotted cow is *dakṣiṇā*. That is to be given to Hotṛ, because Hotṛ means abundance.

11. For (the offering of) the curd preparation for Mitrā-Varuṇa, a sterile cow is *dakṣiṇa*. She, sterile cow is sacred to Mitrā-Varuṇa. If one does not get a sterile cow, it can be a cow which has not yet conceived. For a sterile cow is also not impregnated. She should be given to Adhvaryu. Mitrā and Varuṇa are the *prāṇa* (out-breathing) and *udāna* (in-breathing). The (two) Adhvaryus are *prāṇa* and *udāna*. Therefore she should be given to Adhvaryu.

12. For (the offering of) the *caru* for Bṛhaspati, a white-backed bullock is *dakṣiṇā*. This upper region belongs to Bṛhaspati and above that is the path of *Aryaman* (Sun). Therefore, white-backed bullock is *dakṣiṇā* for this. That is to be given to Brahmā. Brhaspati is the Brahmā for the gods. In the same way this one is Brahmā for this (sacrificer). Therefore it should be given to Brahmā.

13. With these (oblations), one desirous of food can offer (in a non-sacrificial context) at a cow-shed heaped with cow-dung. By those, food offerings from all regions are caused to reach him. From all regions food offerings converge on him. He verily becomes the eater of food from all quarters. (Second Brāhmaṇa Ends)

तृतीयं ब्राह्मणम्

स वै प्रयुजाꣳ हविर्भिर्यजते स यत्प्रयुजाꣳ हविर्भिर्यजत ऋतूꣳहैवैतत्सुषुवाणः प्रयुङ्क्ते त एनमृतवो युक्ता वहन्ति ॥ १ ॥

तानि वै द्वादश भवन्ति द्वादश वै मासास्संवत्सरस्य तस्माद्द्वादश भवन्ति तैर्मासि मासि यजते मासि मास्यैवैतदृतून्युङ्क्ते त एनमृतवो युक्ता वहन्ति ॥ २ ॥

तदु नाद्रियेत शम्यापराव्याधꣳ शम्यापराव्याधमेव षड्भिर्हविर्भिः प्राग्यजमान एति तदृतून्प्राचो युङ्क्ते त एनमृतवो युक्ताः प्राञ्चं वहन्ति शम्यापराव्याधꣳ शम्यापराव्याधमेव षड्भिर्हविर्भिः पुनर्यजमान एति तदृतून्प्रतीचो युङ्क्ते त एनमृतवो युक्ताः पुनरावहन्ति ॥ ३ ॥

तदु नाद्रियेत समानबर्हीꣳष्येव पुर्वेद्युः षड्ढवीꣳषि निर्वपेत्तदृतून्प्राचो युङ्क्ते त एनमृतवो युक्ताः प्राञ्चं वहन्ति तेषां पूर्वाग्निवाहानां द्वावनड्वाहौ दक्षिणा वहन्ति ह्येन[1] मृतवो युक्ता वहत्यनड्वान्युक्तस्समानबर्हीꣳष्येव श्वोभूते षड्ढवीꣳषि निर्वपेत्तदृतून्प्रतीचो युङ्क्ते त एनमृतवो युक्ताः पुनरावहन्ति तेषां पूर्वाग्निवाहानां द्वावनड्वाहौ दक्षिणा वहन्ति ह्येनमृतवो[2] युक्ता वहत्यनड्वान्युक्तः ॥ ४ ॥

ते य ऊर्ध्वाः शैशिरादा प्रावृषो ये ते षण्मासास्तेषाꣳ रूपं पूर्वाणि षड्ढवीꣳषि यथा ग्रैष्मायेति प्राङ् याया अथ य ऊर्ध्वाः प्रावृष आशैशिराद्ये ते षण्मासास्तेषाꣳ रूपमुत्तराणि षड्ढवीꣳषि यथा वार्षिकायेति प्रत्यङ्यायास्तद्ध स्मैतत्पुरैव[3] कुरुपञ्चाला आहुर्ऋतवो वा अस्मान्युक्ता वहन्तीत्यृतून्वा वयं युक्ताननुचराम इत्येते[4] ह स्म तदाहू राजसूययाजिनो हि तेषाꣳ राजान आसुः[5] ॥ ५ ॥ इति तृतीयं ब्राह्मणम् ॥

१. ह्येतं TE
२. ह्येतं TE
३. पुरेव TE
४. इत्येतेन TE
५. See notes

## BRĀHMAṆA III

1. He performs the oblations of *prayuja* (offering associated with *prayuja* chants). The reason why he performs the oblations of *prayuja* is that the anointed (king) thereby yokes the seasons. Those seasons thus yoked carry him.

2. They are twelve (offerings). A year has twelve months. So they are twelve. By them he offers each month. He yokes the seasons monthly. Thus those seasons get yoked.

3. That (above injunction of offering each month) should not be taken note of. Moving eastwards, he offers six of them, each at the distance of the yoke-pin's throw from the other. (Moving from the *Āhavanīya*, he performs six offerings at six different spots each at a distance measured by throwing the yoke-pin). Thus he yokes the seasons at the eastern side. Thus yoked, the seasons carry him eastwards. Then he moves (in reverse) each time at a distance measured by the throw of the yoke-pin; that yokes the seasons at the western side. Thus yoked, these seasons carry him back.

4. This (procedure) is not to be followed. On the previous day, he should prepare the six oblations on a common *barhis* (on a single fire). That yokes the seasons eastwards. Thus yoked, these seasons carry him eastwards. Two of the oxen drawing the original fire are the *dakṣiṇā* for them. Yoked are the seasons. An ox yoked, draws (the carriage). On the next day, on a common *barhis* (on a single fire), he should prepare six oblations. That yokes the seasons westwards. Thus yoked, these seasons carry him back. For them, two of the oxen drawing the original fire are the *dakṣiṇā*. Yoked are the seasons. An oxen yoked, draws (the carriage).

5. The first six oblations represent the six months from *Śiśira* (winter) onwards upto *Prāvṛt* (rainy season) proceeding towards east for the summer. The next six oblations represent the six months from *Prāvṛt* (rainy season) onwards upto *śiśira* (winter) proceeds towards west for the rainy season. This is what the Kuru-Pañcālas said once, "The seasons yoked, carry us; we follow the seasons yoked". They referred to this (procedure in this sacrifice) because their (Kuru-Pañcāla's) kings were those who performed *Rājasūya*. (Third Brāhmaṇa Ends)

## चतुर्थं ब्राह्मणम्

श्येनीं[१] विचित्त[२]गर्भामदितय आलभत इयं वा अदितिरस्या एवैनमेतया गर्भं करोत्यस्या एवैतया गर्भो भवति तस्यावृद्येयं वशाया अष्टापद्यास्तस्य तादृश्येव गौर्दक्षिणा ॥ १ ॥

पृषतीं विचित्त[३]गर्भां मरुद्भ्य आलभते विशो वै मरुतो देवविशं विश एवैनमेतया गर्भं करोति विश एवैतया गर्भो भवति तस्यावृद्येयं वशाया अष्टापद्यास्तस्य तादृश्येव गौर्दक्षिणा ॥ २ ॥

तदाहुर्यामिमामदितय इत्यालभत इत्यादित्येभ्य एतामालभेतेति सर्वं वा आदित्या इति सर्वस्यैवनमेतया गर्भं करोतीति सर्वस्यैवैतया गर्भो भवतीति तस्य सैवावृत्सा दक्षिणाथ यामिमां मरुद्भ्य इत्यालभत इति विश्वेभ्य एतां देवेभ्य आलभेतेति सर्वं वै विश्वेदेवा इति सर्वस्यैवैनमेतया गर्भं करोतीति सर्वस्यैवैतया गर्भो भवतीति तस्य सैवावृत्सा दक्षिणा ॥ ३ ॥ इति चतुर्थं ब्राह्मणम् ॥

॥ इति चतुर्थोऽध्यायः ॥

१. श्यैनीं TE
२. विचित्र Ca, MD
३. Same as above

## BRĀHMAṆA IV

1. He then seizes a white (cow) visibly pregnant for Aditi. She is indeed Aditi, whose embryo he causes him (the king) to be is Aditi, this earth. By this (cow) he becomes the embryo of this earth. The procedure regarding her (white cow) is the same as for eight-footed barren cow. The *dakṣiṇā* for this is that same type (of cow).

2. He then seizes a spotted (cow) visibly pregnant for Maruts. Maruts are Viś (commoners); the commonfolk among gods. By this, he causes him (the king) to be the embryo of Viś (make the king one to be nourished by the subjects). By this (cow) he becomes the embryo of the Viś. The procedure regarding her (spotted cow) is the same as for eight-footed barren cow. The *dakṣiṇā* for it is (a cow) of that type.

3. When they say that she (white cow) be seized for Aditi, they mean seize her for Ādityas. Ādityas means all. So by this, he is made the embryo of all. He becomes the embryo of all thereby. For that the procedure is the same and the *dakṣiṇā* is same. When they say that she (spotted cow) be seized for Maruts, they mean seize her for Viśvedevas. Viśvedevas are all. So by this he is made the embryo of all. He becomes the embryo of all thereby. For that the procedure is the same and the *dakṣiṇā* is same. (Fourth Brāhmaṇa Ends)

**(Chapter Four Ends)**

## पञ्चमोऽध्यायः

### प्रथमं ब्राह्मणम्

स वै श्येतमाश्विनमालभते श्येताविव ह्यश्विनावविं मल्हां[१] सारस्वतीमृषभमिन्द्राय सुत्राम्णे तद्धि पशुष्वैन्द्रꣳ रूपं यदृषभस्य तान्यद्येवꣳ समृद्धानेतान्पशून्विन्देदेत एव स्युर्यद्येवꣳ समृद्धान्न विन्देदप्यजा एव स्युस्त उ वाव सुपरिचरतरा यदजा रोहित उ तर्ह्याश्विनः स्यात् ॥ १ ॥

स यदेतैर्यजते यत्र वै विश्वरूपं त्वाष्ट्रमिन्द्रो जघान तद्ध त्वष्टा क्रुद्धः कुविन्मे पुत्रमवधीदित्यपेन्द्रꣳ सोममाजह्रे स हेत्थमेव प्रसुत आस यथैवायं प्रसुत एवꣳ हैव प्रसुत आसावेन्द्रः ॥ २ ॥

स हेन्द्र ईक्षाञ्चक्र इदं वाव मा यज्ञादन्तर्यन्तीति स यथा बलीयानबलीयस एवꣳ सहसैवाभिद्रुत्यानुपहूत एव द्रोणकलशाच्छुक्रं भक्षयांचकार स हैनं जिहिꣳस विष्वङ् हास्य प्राणेभ्यो दुद्राव मुखाद्धैव न दुद्रावाथान्येभ्यस्सर्वेभ्यः प्राणेभ्यस्तस्मात्प्रायश्चित्तिरभवन्न ह प्रायश्चित्तिरभविष्यद्यन्मुखात्प्रत्यङ्द्रोष्यत् ॥ ३ ॥

चत्वारो वै वर्णा ब्राह्मणो राजन्यो वैश्यः शूद्रो न हात एकतमश्चन भवति यस्सोमं वमति यद्धात एकतमश्चित्स्यात्स्याद्ध प्रायश्चित्तिः स यदस्य नस्तोऽद्रवत्ततस्सिꣳहस्सम-भवद्यत्कर्णाभ्यां ततो वृको यदस्मादवाचः प्राणास्ततश्शार्दूलज्येष्ठाः श्वापदास्संबभूवुरथ यदनेन प्रजननेनैतत्सा[२] परिस्रुदभवदथ त्रिर्निरष्ठीवत्ततः कर्कन्धु कुवलं बदरमिति संबभूवैतत्ततस्समभवद्यदस्य विष्वङ् प्राणेभ्योऽद्रवत् ॥ ४ ॥

स वा इन्द्रस्सर्वेणैव व्यार्ध्यत सोमेन हि व्यार्ध्यत सर्वꣳ हि सोमस्सोमेन सर्वेण व्यृद्धः प्रमयुरिव चचार मङ्कुरिव तमु वा अश्विनावभिषज्यतां तमनेन सर्वेण व्यृद्धं पुनस्समार्धयताꣳ स तादृङ्वेष्ट्वा भवति श्रेयान्वा ॥ ५ ॥

१. See notes
२. प्रजननेनैत्सा Ca

## Chapter Five

### BRĀHMAṆA I

1. He seizes a reddish white (*paśu*) for Aśvins. Aśvins are reddish white (in complexion). Then a she-goat with teats in the dewlap for Sarasvatī, a bull for Indra, the *Sutrāman* (one who protects well), because the bull is the form of Indra among animals. These (*paśus*) may be seized if available with such specifications. If these, with such specifications are not available, any (three) she-goats would suffice. For they are easier to cook. But in that case, the she-goat for Aśvins should be reddish white in colour.

2. Now, as to why he makes offerings with these in this—where Indra killed Viśvarūpa, the son of Tvaṣṭṛ, that Tvaṣṭṛ got furious, (shouting) "Has he really killed my son" and organised a *Soma* sacrifice in which Indra was discarded. (In that) that (*soma* juice) was pressed in the same manner as how this (*soma* for this occasion) has been pressed.

3. That Indra saw through (and thought) "This is how they exclude me from the sacrifice". Just as a stronger person would do with a weaker one, he (Indra), though uninvited, quickly drank from the *droṇa kalaśa* the pure *soma*. But it hurt him. It flowed all around from the openings of the vital airs (in his body). Only from his mouth it did not flow out; but through all other openings of vital airs (it flowed out). Hence that was (an event) to be atoned. If it had flown out through his mouth, there would not have been a need for atonement.

4. There are four castes; the Brahmin, the Kṣatriya, the Vaiśya and the Śūdra. Not one of them vomits *soma*. If any one of them were so (as vomitter of *soma*) there would have been atonement (prescribed for that too) (i.e. since Indra did not vomit *soma* but it came out through other openings of his body, he deserved atonement). From out of what flowed out through his nose, there arose a lion; what (flowed) from his ears, a wolf (came out); what (flowed) from his hind openings, beasts starting with tigers came out; from that which flowed out of his productive organ, the *parisrut* (fermented liquor) came into being. Thrice he spit out; thence were produced the (fruits called) *karkandhu, kuvala,* and *badara*. It so happened that all around they oozed out from the openings.

5. That Indra got emptied of everything. Because he got emptied of *soma*, and *soma* being everything, he was bereft of all *soma*, move about, as though lifeless; unsteady in his steps as if he were lame. Him the Aśvins treated. They made him recouped with everything once again by means of this (*Sautrāmaṇī*). He having performed that *Iṣṭi* (of *Sautrāmaṇī*) became prosperous.

ते होचुः सुत्रातं बतैनमत्रासतामिति यमनेन सर्वेण व्यृद्धं पुनः समार्धयिष्यामीति[3] तस्मात्सौत्रामणी नाम तस्मादु सोमातिपवितमेतया याजयेयुः सर्वेण वा एष व्यृध्यते यः सोमोऽतिपवते सोमेन हि व्यृध्यते सर्वꣳ हि सोमस्तमनेन सर्वेण व्यृद्धं पुनः समर्धयति स तादृङ्ङ्वेष्ट्वा भवति श्रेयान्वा ॥ ६ ॥

अथ यदेष एतया यजते नाहैवैतꣳ सोमोऽतिपवते न केनचन व्यृध्यते सर्वाꣳस्त्वा एष यज्ञक्रतूनवरुन्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्ट उ वा एष यज्ञो देवकृतो यत्सौत्रामण्यनया मेऽपीष्टमसदनयापि सूया इति तस्मात्सौत्रामण्या यजते ॥ ७ ॥

स यदेष आश्विनः पशुर्भवत्यश्विनौ वा एनं तदभिषज्यतां तथो वा एनमेष एतदश्विभ्यामेव भिषज्यति ॥ ८ ॥

अथ सारस्वतो वाग्वै सरस्वती वाचा[4] वा एनं तदश्विनावभिषज्यतां तथो वा एनमेष एतद्वाचैव भिषज्यति ॥ ९ ॥

अथैन्द्र इन्द्रो यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैनं तदश्विनावभिषज्यतां तथो वा एनमेष एतत्तयैव भिषज्यति ॥ १० ॥

तेषु पशुषु श्रप्यमाणेषु सिꣳहलोमानि वृकलोमानि शार्दूललोमानीत्यावपति यावतां चान्येषाꣳश्वापदानां लोमान्यभ्याप्नोत्येतद्वै ततस्समभवद्यदस्य विष्वङ्प्राणेभ्योऽ-द्रवत्तेनैवैनमेतत्समर्धयति कृत्स्नं करोति ॥ ११ ॥

तदु तथा न कुर्यादुल्कया ह स नखिन्या पशूननुषुवति य एतानि पशुषु श्रप्यमाणेष्वावपति तस्मात्परिस्रुत्येवावपेत्तथा होल्कया नखिन्या पशून्नानुषुवति तथो एनं तेन समर्धयति यत्ततस्समभवत्तस्मात्परिस्रुत्येवावपेत् ॥ १२ ॥

अथैतां परिस्रुतꣳ संदधाति[5] ताꣳ सꣳहितामभिमृशत्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति स यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताया

३. समार्धयिष्टमिति Ca
४. वाचो Ca
५. संदधति Ca

**6.** They (the gods) said "Wonderful, they (Aśvins) have saved him and rendered him well-protected". Since they (Aśvins) recouped him who was completely emptied of everything, by this (rite), it is called *Sautramaṇī.* So he who is emptied of *soma* should be made to perform this (*Sautrāmaṇī*). He from whom *soma* flows out, gets emptied of everything. Because *soma* is everything. This (*Sautrāmaṇī*) again enriches him with all that is emptied from him. So this one (Yajamāna) having performed like that (the *Sautrāmaṇī*) becomes prosperous.

**7.** Since this one (the Yajamāna of *Rājasūya*) performs this (*Sautrāmaṇī*), the *soma* does not flow out of him. He is not emptied of anything. He who performs *Rājasūya* is assured of gains for himself, all sacrificial rites, all offerings, all the offerings with *darvi.* This offering (of *Sautrāmaṇī*) is instituted by the gods. So he performs the *Sautrāmaṇī* thinking "May this be also performed by me, may I be consecrated by this rite as well".

**8.** Now as to why the *paśu* is meant for Aśvins here—because it is the Aśvins who cured him (Indra). In like manner, they (priests) get this one (Yajamāna) cured by Aśvins themselves.

**9.** Why there is one (*paśu*) for Sarasvatī?—Sarasvatī is speech. It was with speech that Aśvins treated him (Indra). Therefore, they (priests) cure this one (Yajamāna) by speech.

**10.** Why there is one (*paśu*) for Indra?—Indra is the god of the sacrifice. That which was the deity of the sacrifice, by means of that very deity, Aśvins, cured him. Hence the priests cure this one (Yajamāna) with that same deity (of the sacrifice), i.e. Indra.

**11.** When these animals are being cooked, (Some) one throws hair of a lion, hairs of a wolf and hairs of a tiger; (also) the hairs of all other animals available. Because, these (animals) came out when (*soma*) everything flowed out of the openings (of Indra's body). So with that he now enriches them and makes them complete.

**12.** It should not be done like that. For, he who throws them (hairs) thus, urges the animals on from behind with a clawed fire-brand. Let him therefore rather throw them into the fermented liquor (*parisrut*). So doing he does not urge on the animals from behind with a clawed fire-brand; and thus alone he enriches it therewith and makes it complete. Let him therefore throw them into the *parisrut* only.

**13.** He now mixes up the spirituous liquor (*parisrut*). He touches that (*parisrut*) prepared (saying) "Get done for the Aśvins; get done for Sarasvatī, get done for Indra, the *Sutrāman*". Just as he addressed that deity, holding up the *havis* for it, in the same manner, he addressed this deity. When she (that deity namely the Vapā)

आदिशति सा यदागच्छत्यथ प्रचरति तद्वावग्नी भवतो नेद्यज्ञाहुतीश्च सुराहुतीश्च सह जुहवामेत्युत्तरस्यां वेदा उत्तरवेदिमुपकिरत्युद्धत एवेतरमुपसमाहितो भवति ॥ १३ ॥

अथैतां परिस्रुतमाहरन्ति तां कुशपवित्रेण पवयति पवित्रं वै मेधः कुशाः पवित्रपूतया मेध्यया प्रचराणीति ॥ १४ ॥

स पवयति वायोः पूतः पवित्रेण प्रत्यङ्सोमो अतिस्रुतः । इन्द्रस्य युज्यस्सखेति तदावपति कर्कन्धुसक्तून्कुवलसक्तून्बदरसक्तूनित्येतद्वै ततस्समभवद्यत्त्रिर्निरष्ठीवत्तेनैवैन-मेतत्समर्धयति कृत्स्नं करोति ॥ १५ ॥

अथैतान्ग्रहान्गृह्णाति स त्रीन्वा गृह्णात्येकं वा स यद्यह त्रीन्गृह्णात्येतयैव समान्या पुरोरुचा गृह्णाति यद्युवेकं गृह्णाति विग्राहं गृह्णात्येकं त्वेव गृह्णीयादेका हि पुरोरुगेकानुवाक्यैका याज्या तस्मादेकमेव गृह्णीयात् ॥ १६ ॥

स गृह्णाति कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं न जग्मुः ॥ उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्ण इत्यथाहाश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णेऽनुब्रूहीति ॥ १७ ॥

सोऽन्वाह युवꣳ सुराममश्विना नमुचा आसुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतमित्याश्राव्याहाश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणं यजेति ॥ १८ ॥

स यजति पुत्रमिव पितरा अश्विनोभेन्द्रावधुः काव्यैर्दꣳसनाभिः यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगिति वषट्कृते जुहोत्यनु वषट्कृते जुहोति ॥ १९ ॥

अथ शतवितृण्णं वा कुंभमाहरन्ति नववितृण्णं वा स यद्यह शतवितृण्णो भवति शतायुर्वा अयं पुरुषश्शतवीर्यश्शत तेजास्तस्मान्नु शतवितृण्णो यद्यु नववितृण्णो नव वा इमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥ २० ॥

arrives and is proceeded with. There are two fires, (thinking) 'Let us offer the sacrificial *vapā* oblation and the *surā* oblation (liquor of *parisrut*) together'. On the northern part of the altar, they lay the northern fire and the other fire in a raised manner (on a mound) (in the south).

**14.** There they bring that *parisrut* and purify it with stalks of *darbha* grass (thinking) 'The sacrificial grass is pure and I shall proceed with this (*parisrut*) purified by the sacrificially pure (grass)'.

**15.** He purifies (saying) "The inviting *vāyu* purified by this *pavitra* (strainer) which is purifying in nature, has overflown backwards; Indra's mated friend". Then he puts into it (*parisrut*), the flours of *karkandhu, kuvala* and *badara,* because these came out there from when he (Indra) thrice spit. By those (very fruits) he enriches it and makes it whole.

**16.** Then he takes those *grahas.* He takes three (*grahas*) or one. If he takes three, he takes with equal number of *puroruk* chants. If he takes one, he takes separately. One should take only one (*graha*). There is only one puroruk, one invitatory prayer and one offering chant. Hence only one (*graha*) should be taken.

**17.** He takes (the *graha* saying) "Yea, even as the harvesters of barley cut their barley crops and other produce spreading around in due order, so you bring foods here"—here for these (Yajamānas) who pay their obeisance to this sacrifice (with *barhi* grass spread around). "Thou art taken with a support for the Aśvins, for Sarasvatī and for Indra, the *Sutrāman*". (Then he says) "Recite the invitatory chants to Aśvins, Sarasvatī and Indra, the *Sutrāman*".

**18.** He recites (after the Hotṛ) "O Aśvins!, you both having together consumed the varied, charming *soma.* With Namuci, become the masters of the auspicious rite and protect Indra to act". Having called for the *Śrauṣat,* he says "Pronounce the offering chants to the Aśvins, to Sarasvatī and to Indra, the *Sutrāman*".

**19.** He prays "Just as parents protect their son, these Aśvins protected you, O Indra! They have stood by you with eulogies of your deeds and with their action. Whilst you gulped the charming *soma,* O Indra! Sarasvatī cured you by her services". He makes the offering on the uttering of *Vaṣaṭ.* He again makes an offering when a second time *Vaṣaṭ* is uttered.

**20.** They now bring a pitcher with hundred perforations or with nine. If it is with hundred holes (it is because) man has a life-span of hundred years. He is hundredfold strong, and has hundredfold effulgence. Hence it is with hundred perforations. If it is one with nine holes (it is because) these are nine vital airs in man and hence it has nine holes.

तः शिक्योदुतं दक्षिणमग्निमुपर्युपरि धारयन्ति तदिमां परिशिष्टां परिस्रुतमासिञ्चति[६] ॥ २१ ॥

तं विश्चोतन्तमुपतिष्ठते[७] पितृणाः सोमवतां तिसृभिर्ऋग्भिः पितृणां बर्हिषदां तिसृभिर्ऋग्भिः पितृणामग्निष्वात्तानां तिसृभिर्ऋग्भिर्यत्र वा अद इन्द्रः सोमोऽत्यपवत तद्यदस्य व्यृद्धस्य पितॄनगच्छत्त्रया वै पितरस्तदेवास्यैतेन समीरयति तदाप्यायति तेनैनः समर्धयति तस्मादेवमुपतिष्ठते ॥ २२ ॥

अथैतः सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोळाशं निर्वपति सविता वै देवानां प्रसविता सवितृप्रसूतौ वा एनं तदश्विनावभिषज्यतां तथो वा एनमेष एतत्सवितृप्रसूत एव भिषज्यति ॥ २३ ॥

ऐन्द्रमेकादशकपालमिन्द्रो[८] यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैनं तदश्विनावभिषज्यतां तथो वा एनमेष एतत्तयैव भिषज्यति ॥ २४ ॥

वारुणं दशकपालं वरुणो वा अर्पयिता वरुणो वै तदर्पयति यदिदं किञ्चर्छति तमेवैतत्प्रीणाति स एनं प्रीतस्तेन समर्धयति येनार्पयति ॥ २५ ॥

स यदि सोमातिपवितमेतया याजयेयुरिष्टा अनुयाजा स्युरव्यूळ्हे स्रुचावथैतैर्हविर्भिः प्रचरेयुः पश्चाद्वै सोमोऽतिपवते जघनार्धो वा एष यज्ञस्य मेध उ वा एतद्यदेतानि हवीःषि तदेनमेतेन मेधसा पश्चादपिदधात्याश्विनेनोन्तर्हि द्विकपालेन पुरस्तात्प्रचरेयुः ॥ २६ ॥

तदु तथा न कुर्याद्ध्वलति वै स यो यज्ञपथादेत्येत्यु वा एष यज्ञपथाद्य एवं करोति तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरेयुस्तदेवैतैर्हविर्भिः प्रचरेयुस्तस्य नपुःसको गौर्दक्षिणा न वा एष स्त्री न पुमान्यन्नपुःसको नो वा एष सोमो व सुरा यत्परिस्रुद्यदाहास्या ग्रहान्गृह्णन्ति स यदग्नौ जुह्वति तेन न सुरा यदुन भक्षयन्ति तेन न सोमोऽश्वा वाव[९] रथवाही सा वै न स्त्री न पुमान्यदश्वा रथवाही यदह रथं वहति तेन न स्त्री यदु स्त्री तेन नाश्वः ॥ २७ ॥ इति प्रथमं ब्राह्मणम् ॥

६. आसिञ्चन्ति TE
७. विश्चोतन्तं TE
८. See notes
९. अश्वा वा रथ Ca

**21.** They hold it, placed in a sling, up above the southern fire. Into that he pours the residue of the *parisrut* (left over after offering).

**22.** While it (*parisrut* liquor) trickles through (the holes of the pitcher); he stands by worshipping with three *Ṛk mantras* propitiating the *pitṛs* who are associated with Soma (*Somavantaḥ pitaṛh*); the *pitṛs* seated on the *barhi* grass (seats); and the *Pitṛs* who are *Agniṣvāttās* (consigned to fire); whence *soma* flowed out of Indra, that part of it which went to the *pitṛs* from the emptied Indra; *pitṛs* being (of) three categories; with that very same part he unites hīm (Indra) now; he propitiates him; and enriches him with that. Therefore he thus stands by (worshipping).

**23.** Then he prepares the *puroḍāśa* for Savitṛ in twelve potsherds or in eighteen potsherds; Savitṛ is the impeller of the gods. Impelled by Savitṛ it was that the Aśvins treated him (Indra). In like manner, this one (Yajamāna) being impelled by Savitṛ, cures him (Indra).

**24.** Then there is (a *puroḍāśa*) for Varuṇa in twelve potsherds. For, Varuṇa is the piercer and whatever wound is there it is due to Varuṇa piercing. This (*puroḍāśa*) appeases him (Varuṇa). By him (Varuṇa) the piercer, he enriches him (cures him).

**25.** Then there is (a *puroḍāśa*) for Indra in eleven potsherds. Indra is the deity of the sacrifice. Aśvins cured him by that very deity of the sacrifice. In the same manner this one (Yajamāna) cures him by means of that (very deity).

**26.** And if he makes this offering to the one emptied of *soma*, then after the *Anuyājās* (animal offerings are made) and the two *srucas* are separated—they should proceed with these oblations. *Soma* flowed out (of Indra) at the back side and this is the hind part of the sacrifice. These oblations are the fat (of Indra). Hence with these fats he thus reinforces him at the back. In that case he should prepare a *puroḍāśa* in two potsherds for Aśvins and proceed to the fore-side.

**27.** Let him, however, not do it in that way. For whoever departs from the path of sacrifice, faulters. One who does like this swerves from the path of sacrifice. When he proceeds with the other *vapā* offerings of *paśus*, at that very time, he should proceed with these oblations. For that a bull (casterated) is *dakṣiṇā*. For, it is neither male nor female. This *parisrut* is neither liquor nor is it *soma*. Since it is said that they take the *grahas* for this (offering) and is offered into fire, it is not liquor. Since they do not eat (drink) it, it is not *soma*. (Alternatively, *dakṣiṇā* can be) a draught-mare. Since it draws a chariot, it is not female and since it is a mare, it is not a horse. (First Brāhmaṇa Ends)

द्वितीयं ब्राह्मणम्

स वा एतेनाभिषेचनीयेनेष्ट्वा संवत्सरं केशान्न वपते स यत्केशान्न वपते रसो वा अयं वीर्यं तेज इदमपाᳬ संभृतं येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्यैकोऽभिषेकः केशान्प्रथमानाच्छति स यद्ध केशान्वपेत[1] जिह्माᳬ हैताᳬ श्रियं विनाशयेद्व्युदुह्यात्तस्मात्केशान्न वपते ॥ १ ॥

स वै संवत्सरं न वपते संवत्सरसम्मितो हि व्रतचर्या तस्मात्संवत्सरं न वपतेऽथ खलु संवत्सर एतेन व्रतविसर्जनीयेन यजते केशवपनीयेन स एषोऽपयोग इति स्तोमः ॥ २ ॥

तस्यैकविᳬशं प्रातस्सवनᳬ सप्तदशं माध्यन्दिनᳬ सवनं पञ्चदशं तृतीयसवनᳬ सहोक्थ्यैस्सह[2] षोळ्शिना सह रात्र्या त्रिवृद्राथन्तरस्सन्धिरेवमेष क्लृप्तो भवति स यदेव-मेष क्लृप्तो भवत्येतं वा एष गच्छति य एष तपति यो राजसूयेन यजते तदेतां गतिं गत्वा योऽस्यैष जितः स्वर्गो लोक इमां प्रतिष्ठां प्रत्यवैति यावदस्येह मानुषमायुस्त-स्यैतत्[3] ॥ ३ ॥

[4]एकविᳬशं प्रातस्सवनं भवत्येकविᳬशो वा एव य एष तपति द्वादश वै मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविᳬशस्स एतेनैकविᳬशेन प्रातः सवनेनैतस्मादेकविᳬशादपयुङ्क्ते ॥ ४ ॥

स सप्तदशं प्रत्यवैति सप्तदशात्पञ्चदशं पञ्चदशात्त्रिवृतमियं वै त्रिवृदियं प्रतिष्ठा तदस्यामेव प्रतिष्ठायामन्ततः प्रतितिष्ठति ॥ ५ ॥

रथन्तरं पृष्ठं भवतीयं[5] वै रथन्तरमियं प्रतिष्ठा तदस्यामेव प्रतिष्ठायामन्ततः प्रति-तिष्ठति ॥ ६ ॥

१. केशान्वपेत TE, H, My
२. सहोक्थैः Ca
३. तस्मै तद्यत् TE
४. यदेकविᳬशं Ca
५. भवतीदं TE

## BRĀHMAṆA II

1. Having performed the consecration ceremony, he does not shave his hair for a year. Why he does not shave is because that collected essence of waters with which he was bathed (at the consecration) is vigour and glory. When he is consecrated, the flow (of waters) first reaches the hairs. If he is to shave, it renders that (vigour) fickle and destroys that glory and make (him) bereft of energy. Therefore he does not shave the hair.

2. He does not shave for a year. The observance of vow is one year duration. Hence he does not shave for a year. After one year, he performs the offering to mark the termination of the vow; namely the discarding of the hairs. That is the day meant for *stoma* (praising).

3. There are twenty-one *stomas* in the morning *savana*; seventeen in the midday *savana*, twelve in the third *savana*. With three *Uktha stotras*, one *Ṣoḍāśī* and twelve *Rātriparyāya stotras*. At the end of the previous night, there is one *Trivṛt* to be sung in *Rathantara* which is called *Sandhistotra* (sung at the dawn of the day). This should be connected with *Trivṛt stoma*. Thus they are fixed. With that which is thus ordained, the one who performs *Rājasūya* goes to that one who burns (Sun). Having gone there and conquered the heavenly world, he comes back to this (earth, i.e. the *Rathantara*); which is his firm settlement and remains there for the duration of the human life-span.

4. The morning *savana* has twenty-one *stotras*. This one who burns yonder (Sun) is twenty-onefold. There are twelve months, five seasons and three worlds and Āditya is the twenty-first. By this morning *savana* with twenty-one *stotras*, he gets separated from the twenty-first one (i.e. Āditya).

5. He returns to (the midday *savana* of) seventeen *stotras* and from seventeen-fold, he reaches fifteen-fold and from fifteen, he moves to the *Trivṛt*. This (earth) is *Trivṛt* and it is the firm settlement. Thus he gets established in this.

6. *Rathantara* indeed is *Pṛṣṭha* (*stotra*) of this (sacrifice). *Rathantara* is this (earth) which is well-established. So he ultimately gets established in this firm earth.

स एतेनेष्ट्वा निवर्तयत एव केशान्न वपते यद्ध वपेतैताꣳ ह श्रियं जिह्मां विनाशयेद्व्युदुह्यात्तदात्मन्येवैतच्छ्रियं नियुङ्क्त आत्मन्येवैतच्छ्रियं धत्ते तस्मान्निवर्तयत एव केशान्न वपते ॥ ७ ॥

अथोपानद्‌भ्यामेव[६] चरत्युपानद्‌भ्यामेवासन्दीमासन्द्या वोपानहावुपानद्भ्यां[८] वा यानं यानाद्धोपानहौ[९] सर्वꣳ हेष उपर्युपरि भवति यो राजसूयेन यजते ॥ ८ ॥ इति द्वितीयं ब्राह्मणम् ॥

### तृतीयं ब्राह्मणम्

वृत्रे ह वा इदꣳ सर्वमास यदृचो यद्यजूꣳषि यत्सामानि तद्ध सर्वं वृत्र एवास तमु हेन्द्रो जिघाꣳसांचकार ॥ १ ॥

स होवाचेन्द्रो विष्णुं प्रहरिष्यामि वा अहमस्मै वृत्राय वज्रमिति तस्य मे त्वमनुष्ठ्यावेति[१] तथेति होवाच प्रहरत्तस्य तेऽहमनुष्ठ्यावेति[२] तस्मा अस्मै वृत्रायेन्द्रो वज्रमुद्ययाम स हायं वृत्रोऽस्माद्वज्रादुद्यताद्बिभयाञ्चकार ॥ २ ॥

स होवाच मा नु मे प्रहार्षिरित्यस्त्यन्वा[३] इदं मयि वीर्यं तन्नु ते प्रयच्छानीति तथेति तस्मै यजूꣳषि प्रायच्छत्तस्मै द्वितीयमुद्ययाम ॥ ३ ॥

स होवाच मा न्वेव मे प्रहार्षिरित्यस्त्युन्वा[४] इदं मयि वीर्यं तन्नु ते प्रयच्छानीति तथेति तस्मा ऋचः प्रायच्छत्तस्मै तृतीयमुद्ययाम ॥ ४ ॥

स होवाच मा न्वेव मे प्रहार्षिरित्यस्त्युन्वा[५] इदं मयि वीर्यं तन्नु ते प्रयच्छानीति तथेति तस्मै सामानि प्रायच्छदथ योऽस्य योनिराशय आस तमनुपरामृश्व लुलोप सैषेष्टिरभवदेषा

६. उपानड्भ्यामवचर Ca
७. उपानड्भ्यां वैवा Ca
८. वोपानहा उपानड्भ्यां Ca
९. यानाद्धोपानहौ Ca

१. अनुष्ट्या TE
२. Same as above
३. प्रहार्षीरित्यस्त्यु न्वा Ca
४. Same as above
५. Same as above

7. He only clips his hair after making this offering. He should not shave the hair. He who shaves, makes that vigour fickle and make that glory to fall and get uprooted. By (cutting and not shaving), he retains that glory connected to himself. He carries that prosperity in himself. Therefore he should only clip and not shave the hair.

8. He gets down with the shoes (put on); and with shoes (he mounts) the stool and gets down from the stool with shoes on; or he mounts the chariot with shoes on or gets down from the chariot into the shoes. Because he who performs *Rājasūya* is above everything. (Second Brāhmaṇa Ends)

## BRĀHMAṆA III

1. Everything here was within Vṛtra, the *Ṛks*, the *Yajus* and the *sāmans*. All that was in Vṛtra, Indra wished to strike him.

2. He (Indra) told Viṣṇu, "I will hurl this thunderbolt at Vṛtra; you stand by me". He (Viṣṇu) said "Yes you strike and I shall stand by you". Then Indra aimed the thunderbolt against him. Vṛtra got scared of that raised thunderbolt.

3. He pleaded, "Don't strike me. There is this prowess in me and that I will give to you" (Indra said) "Yes". He (Vṛtra) gave him the *Yajus mantras*. He (Indra) raised it (the thunderbolt) for the second time.

4. He (Vṛtra) said, "Don't strike me. There is this prowess in me and that I will give to you". (Indra said) "Yes". He (Vṛtra) gave him the *Ṛk* chants. He (Indra) raised it (thunderbolt) for the third time.

5. He (Vṛtra) said "Don't strike me. There is this prowess in me and that I will give to you ". (Indra said) "Yes". He (Vṛtra) gave him the *Sāmans*. Now that part of Indra's body, (i.e. the heart) of Vṛtra which was the seat of these (*Yajus* etc.), he (Indra) spotted out and tore it off. That became this *iṣṭi* (offering). This is called

त्रैधातवी स यदेतस्यां योनावेतस्मिन्नाशय एषा त्रयी विद्या त्रिधातुरिवाशयद्धातुश इव तस्मात्त्रैधातवी नाम तस्मादप्येतर्ह्येनया त्रय्या विद्ययैवमेव यज्ञं तन्वते यजुर्भिरेवाग्रेऽथर्ग्भिरथ सामभिरेवꣳ ह्येनामिन्द्राय प्रायच्छत् ॥ ५ ॥

स वा एष ऐन्द्रावैष्णवो द्वादशकपालः पुरोळाशो भवतीन्द्रो हि वज्रमुदयच्छद्विष्णु-रन्वतिष्ठताथ यद्द्वादशकपालो भवति द्वादश वै मासास्संवत्सरस्य संवत्सरसम्मितो वा एषेष्टिस्तस्माद् द्वादशकपालो भवति ॥ ६ ॥

तमुभयेषां व्रीहियवानां गृह्णाति स व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषाꣳ रूपं क्रियतेऽथ यवमयं तदृचाꣳ रूपं क्रियतेऽथ व्रीहिमयं तत्साम्नाꣳ रूपं क्रियत एवमेष योनिराशय एतस्यास्त्रय्या विद्याया रूपं क्रियते तद्यदेतद्धविस्त्रिधात्विव भवति धातुश इव तस्मात्त्रैधातवी नाम ॥ ७ ॥

सैषा राजसूययाजिन उदवसानीयेष्टिस्स्यात्सर्वान्वा एष यज्ञक्रतूनवरुन्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते तस्य यज्ञो यातयामेव भवति सोऽस्मात्पराङिव भवत्येतावानु वै यज्ञो यावत्येषा त्रयी विद्यैतया हि त्रय्या विद्यया यज्ञं तन्वते तत्पुनर्यज्ञमारभते तथास्यायातयामा यज्ञो भवति तथास्मान्न पराङ् भवति ॥ ८ ॥

अथो यस्सहस्रं दद्यात्तस्यैषोदवसानीया स्याद्रिरिचान इव वा एष एतद्भवति यस्सहस्रं ददिवानेतद्वै तद्वाचः प्रजातꣳ सहस्रं यदिन्द्राविष्णू त्रेधा वैरयेतां यदेषा त्रयी विद्या स एतेन सहस्रेण पुनराप्यायते तथास्यायातयामा यज्ञो भवति तथास्मान्न पराङ् भवति ॥ ९ ॥

अथो ये दीर्घसत्रमासीरन्त्संवत्सरं वा भूयो वा तेषामेषोदवसानीया स्यात्सर्वं वै तेषामाप्तं भवति ये दीर्घसत्रमासते संवत्सरं वा भूयो वा सर्वमु वा एषेष्टिस्तस्मात्तेषा-मेषोदवसानीया स्यात् ॥ १० ॥

अथो एनयाभिचरेदेतया ह वै भद्रसेनमाजातशत्रवमारुणिरभिचचार क्षिप्रं किलैनया-स्तृणुत इति होवाच याज्ञवल्क्योऽपि वा एतयेन्द्रो वृत्रस्यास्थानमच्छिनदपि ह वा अस्यास्थानं छिनत्ति य एनयैवंविद्वानभिचरति ॥ ११ ॥

*Traidhātavī* because this spot happened to be the seat where this three-fold Vedic knowledge abided as three humours (*dhātus*); each humour distinctly settled and hence it is called *Traidhātavī*. Because of that, this sacrifice is pervaded by this three-fold *vidyā* (in due order); first by *Yajus*, then by *Ṛks* and then by *Sāmans*. This is how (the order in which) it was given to Indra.

6. And now, as to why this *puroḍāśa* in twelve potsherds for (the duo) Indra-Viṣṇu?—It was Indra who raised the thunderbolt and Viṣṇu stood by him. Why there are twelve potsherds is because there are twelve months for a year and this *iṣṭi*, is of the same measure as the year. Hence there are twelve potsherds.

7. He prepares it (*puroḍāśa*) with both barley and rice. First he makes a ball of rice which is the form of *Yajus*. Then he makes a ball of barley (placed adjacently to it) which is the form of *Ṛks*. Again (next to it a ball) of rice which is the form of *Sāmans*. This is how it forms the source (seat) where the three (*dhātūs*) abide and that constitutes the form of the threefold Vedic knowledge.

8. This (*iṣṭi* or *Traidhātava* offering) will be the completing rite (to be made) by the one who performs the *Rājasūya*. He who performs *Rājasūya* does indeed block for himself all the sacrificial rites, all offerings, even the offerings by *darvi*. His sacrifice becomes exhausted (putrified), as it were and he turns away from it. As it were, now the whole sacrifice is as extant as this threefold Vedic knowledge. Therefore by this offering with that threefold *vidyā*, he (actually) again starts the sacrifice. By that his sacrifice becomes one that is not exhausted and he becomes one who has not turned away from it.

9. And, for him, who gives thousand (cows as *dakṣiṇā* to the priests), this (*iṣṭi*) shall be the culminating rite. Because he who gives thousand (cows) becomes emptied, as it were. That triple Veda is the thousandfold progeny of *vāk*. Since Indrā-Viṣṇu uttered it in three (forms of *Yajus*, *Ṛk* and *Sāman*) it is called *Trayī-vidyā* (triple knowledge). With these hundred-fold (*Veda-vidyā*), he re-invigorates the sacrifice and (hence) his sacrifice does not get putrified nor does he turn away from it.

10. Those who sit through (observe) a long sacrificial session (*Dīrgha Satra*) for a year or more, this (very same *Traidhātava iṣṭi*) shall be the cultiminating rite. Everything becomes accessible to them who sit through in the *Dīrgha Satra*. Whether it is after an year or more (there too) this *iṣṭi*, being everything, shall be the culminating rite.

11. One can exorcise with this (*iṣṭi*). It is by means of this that Āruṇi bewitched Bhadrasena, the son of Ajātaśatru. Yājñavalkya also said "Quickly spread (the *barhis* grass for performing this *iṣṭi*". It is by means of this (*iṣṭi*), Indra pounded the citadel of Vṛtra. Therefore one who knows thus and exorcises by means of this (*iṣṭi*), pounds (smashes) the citadel (of his enemy).

अथो एनया भिषज्येद्यमन्वेकेन[६] वा यजुषैकया वर्चैकेन वा साम्ना भिषज्येत्तमन्वगदं[७] कुर्यादथ किं यत्त्रय्या विद्यया यथा त्रय्या विद्यया भिषज्येदेवं तत्स यदि हापि गतासुरिव भवत्याहैवैनया हरति तत् ॥ १२ ॥

त्रयश्शतमानाः प्रवृत्तास्ते ब्रह्मणो दक्षिणा न वै ब्रह्मा स्तुते नाश्रावयति न शꣳसत्यथ यशो न वै हिरण्यमश्नन्ति नैनेन किंचन कुर्वन्त्यथ यशस्तिस्रो धेनवो होतुर्भूमा हि तिस्रो धेनवो भूमा हि होता त्रीणि वासाꣳस्यध्वर्योस्तनुत इव ह्यध्वर्युर्यज्ञं तन्वत इव वासाꣳसि त्रयश्चानड्वा हो वहति ह्यध्वर्युर्युक्तो वहत्यनड्वान्युक्तो गां वाजं वाग्नीधे ददाति ता वा एता द्वादश वा त्रयोदश वा दक्षिणा ददाति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासास्संवत्सरो यज्ञः प्रजापतिस्तदेतं प्रत्यक्षं यज्ञं प्रजापतिमाप्त्वा तं परिगृह्य तमात्मनि कुरुते तमात्मनि धत्ते ॥ १३ ॥ इति तृतीयं ब्राह्मणम् ॥

॥ इति पञ्चमोऽध्यायः ॥

॥ राजसूयकाण्डं समाप्तम् ॥

६. भिषज्येद्यं न्वेकेन Ca

७. भिषज्येत्तं न्वगदं Ca

12. And, indeed one can also heal (treat) with this (*iṣṭi*). Whomsoever, one would treat with one *Yajus mantra*, one *Ṛk* chant or one *Sāman*, that (person so treated) will become free from disease. So what about (doing so) with the (entire) three-fold *vidyā*? One who is treated by the three-fold *vidyā*, even if he is, as though dead, his (ailments) are removed by this *Traidhātava Iṣṭi*).

13. There are (prescribed as *dakṣiṇā*) three gold pieces weighing hundred *mānās* (units of weight). This is the *dakṣiṇā* for Brāhmaṇa. The Brāhmaṇa (though) does not perform (the offerings like Adhvaryu) nor recites (*Sāmans* like Udgātā), nor chants (*Ṛks* like Hotā) (but) is the very embodiment of fame (and honourable). And gold, they do not eat nor do anything. But still it is respectable. For the Hotā, three cows (with calves) are *dakṣiṇā*. Three cows (with calves) are abundance and the Hotā signifies abundance. Three garments (are the *dakṣiṇā*) for the Adhvaryu. Adhvaryu spreads, as it were, the sacrifice and the garments spread themselves (over the body). The Adhvaryu takes (gets as *dakṣiṇā*) three calves (as well) because they are connected with the cows. He gives a cow or a steed (as *dakṣiṇā*) to Agnīdh. Thus he gives twelve or thirteen items as *dakṣiṇā*. There are twelve or thirteen months for the year. Sacrifice, i.e. Prajāpati is the year. Thus having obtained the visible Prajāpati in *Yagña* form and having acquired it, he puts it into himself and owns it himself. (Third Brāhmaṇa Ends)

**(Chapter Five Ends)**

RĀJASŪYA KĀṆḌA ENDS

# उखासम्भरणकाण्डम्

## प्रथमोऽध्यायः

### प्रथमं ब्राह्मणम्

असद्वा इदमग्र आसीत्तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत्तदाहुः के त ऋषय इति प्राणा वा ऋषयस्ते यत्पुरास्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसारिष[1]ंस्त-स्मादृषयः ॥ १ ॥

स योऽयं मध्ये प्राण एष एवेन्द्रस्तानेष प्राणान्मध्यत इन्द्रियेणैन्ध यदैन्ध तस्मादिन्ध इन्धो ह वै तमिन्द्र इत्याचक्षते परोक्षं परोक्षकामा हि देवास्त इद्धाः सप्त नाना पुरुषान-सृजन्त ॥ २ ॥

तेऽब्रुवन्नवा इत्थंसन्तः शक्ष्यामः प्रजनयितुमिमान्त्सप्त पुरुषानेकं पुरुषं करवामेति त एनान्त्सप्तपुरुषानेकं पुरुषमकुर्वन्यदूर्ध्वं नाभेस्तौ द्वौ समौब्जन्यदवाङ् नाभेस्तौ द्वौ पक्षः पुरुषः पक्षः पुरुषः प्रतिष्ठैक आसीदथ यैतेषांं सप्तानां पुरुषाणांं श्रीर्यो रस आसीत्तमूर्ध्वंं समुदौहंस्तदस्य शिरोऽभवद्यच्छ्रियंं समुदौहंस्तस्माच्छिरस्तस्मिन्नेतस्मिन्प्राणा अश्रयन्त[2] तस्माद्वेवैतच्छिरोऽथ यत्प्राणा अश्रयन्त[3] तस्मादु प्राणाः श्रियोऽथ[4] यत्सर्वस्मिन्नात्मन्नश्रयन्त तस्मादु शरीरम् ॥ ३ ॥

स एव पुरुषः प्रजापतिरभवत्स यः सः पुरुषः प्रजापतिरभवदयमेव[5] स योऽयमग्निश्चीयते स वै सप्तपुरुषो भवति सप्तपुरुषो ह्ययं पुरुषो यच्चत्वार आत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छान्यथ यदेकेन पुरुषेणात्मानं वर्द्धयति तेन वीर्येणायमात्मा पक्षपुच्छान्युद्यच्छत्यथ यश्चिते[6]ऽग्निर्धीयते[7] यैवैतेषांंसप्तानां पुरुषाणांंश्रीर्यो रसस्तमेतमूर्ध्वंं

१. अऋषंं TE
२. आश्रयन्त TE
३. Same as above
४. श्रियोयत्स My, H
५. पतिरभूत्स यः H, My
६. चित्तो H
७. ऽग्निर्निर्धीयते V2

# UKHĀSAṂBHARAṆA KĀṆḌA

## Chapter One

### BRĀHMAṆA I

1. There was here, in the beginning, the non-existent, indeed. To the query, as to what that was non-existing, it is said that assuredly, the *Ṛṣis* were the non-existent to begin with. Again for the question "Who were those *Ṛṣis*?", the *Ṛṣis* were, no doubt, the vital airs. Because, before (the advent of) this universe, they desired it and wore themselves out (*Ṛṣ*) with toil and austerity. Hence (they are) *Ṛṣis*.

2. The vital air which is in the centre, doubtless, is Indra. By his power, he kindled (activated) those other vital airs from the middle. In as much as he kindled (*indh*), he is the kindler (activator) and indeed, he being the kindler is called Indra i.e. esoterically, for, the gods like concealing (in mystic appellations). Thus activated, they (the vital airs) produced seven separate individuals (persons).

3. They said, surely, being in this state, we shall not be able to generate; let us make these seven individuals into one person. They made those seven into one. Two of them constituted the portion above the navel and two of them below the navel. One individual went to make one side and one the other side; while one formed the base (feet). Then what excellence (*Śrī*), life-essence that all those seven had, went to constitute the top. Because the excellence or *Śrī* was pressed into it, it is being called *Śira* or the head. In this head, the vital breaths positioned themselves and because the vital airs which are excellence or *Śrī* pervaded the entire system, it is called *Śarīra* or body.

4. That same person became Prajāpati and that person who became Prajāpati is none else than Agni (altar) who is now being built. He verily comprises in him seven individuals; for this Agni is made of seven persons; because four constitute his frame (trunk) and three go to form his side (wings) and tail (base). Indeed his trunk is made of four and his wings and tail of three. Since he makes the body larger by becoming one person (from seven), by that (increased) vitality, the body raises its wings and tail. Into the fire that is kindled on the altar above, whatever excellence and whatever essence was in those seven persons, accumulate and that is his

समुदूहन्ति तदस्यैतच्छिरस्तस्मिन्नेतस्मिन्त्सर्वे देवा श्रिता अत्र हि सर्वेभ्यो देवेभ्यो जुह्वति तस्माद्वेवैतच्छिरः ॥ ४ ॥

सोऽयं पुरुषः प्रजापतिरकामयत भूयान्त्स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याꣳ सैवास्मै प्रतिष्ठाभवत्तस्मादाहुर्ब्रह्मास्य सर्वस्य प्रतिष्ठेति तस्मादनूच्य प्रतितिष्ठति प्रतिष्ठा ह्येषा यद्ब्रह्म तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत ॥ ५ ॥

सोऽपोऽसृजत वाच एव लोकाद्वागेवास्य सासृज्यत सेदꣳ सर्वमाप्नोद्यदिदं किं च यदाप्नोत्तस्मादापो यदवृणोत्तस्माद्वाः ॥ ६ ॥

सोऽकामयताभ्योऽद्भ्योऽधिप्रजायेयेति सोऽनया त्रय्या विद्यया सहापः प्राविशत्तत आण्डꣳ समवर्तत तदभ्यमृशदस्त्वित्यस्तु भूयोऽस्त्वित्येवतदब्रवीत्ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या तस्मादाहुर्ब्रह्मास्य सर्वस्य प्रथमजमित्यपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यत तदस्य तन्मुखमेवासृज्यत तस्मादनूचानमाहुरग्निकल्प इति मुखꣳ ह्येतदग्नेर्यद्ब्रह्म ॥ ७ ॥

अथ यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यत स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्निरग्निर्ह वै तमग्निरित्याचक्षते परोक्षं परोक्षकामा हि देवा अथ यदश्रु संक्षरितमासीत्सोऽश्रुरभवदश्रुर्ह[८] वै तमश्व इत्याचक्षते परोक्षं परोक्षकामा हि देवा अथ यदरसदिव स रासभोऽभवदथ यः कपाले रसो लिप्त आसीत्सोऽजोऽभवदथ यत्कपालमासीत्सा पृथिव्यभवत् ॥ ८ ॥

सोऽकामयताभ्योऽद्भ्योऽधीमान्प्रजनयेयमिति ताꣳ संक्लिश्याप्सु प्राविध्यत्तस्यै यः पराङ् रसोऽत्यक्षरत्स कूर्मोऽभवदथ यदूर्ध्वमुदौ क्ष्यतेदं तद्यदिदमूर्ध्वमद्भ्योऽधिजायते सेयꣳ सर्वाप एवानु व्यैत्तदिदमेकमेव रूपꣳ समदृश्यताप एव ॥ ९ ॥

सोऽकामयत भूय एव स्यात्प्रजायेतेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तेपानः फेनमसृजत सोऽवेदन्यद्वा[९] एतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानो

८. अश्रु is treated as masculine noun
९. अवेद् archaic usage

